परिणामप्रतिपादनार्था ॥ तत्प्रतिपत्तौ फलानवगमात् । सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था त्वेषा । तत्प्रतिपत्तौ फलावगमात् । "स एष नेति नेत्यात्मा" [ बृ० ४ । २ । ४ ] इत्युपक्रम्याह–"अभयं वै जनक प्राप्तोऽसि" [ बृ० ४ । २ । ४ ] इति ॥ तस्मादस्मत्पक्षे न कश्चिदपि दोषप्रसङ्गोऽस्ति ॥ २७ ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

अपि च नैवात्र विवदितव्यम् ॥ कथम् ॥ एकस्मिन्ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः स्यादिति ॥ यत आत्मन्यप्येकस्मिन् स्वप्नदृशि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिः पठ्यते "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान् पथः सृजते" [ बृ० ४ । ३ । १० ] इत्यादिना । लोकेऽपि देवादिषु मायाव्यादिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते, तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्यतीति ॥ २८ ॥

## स्वपक्षदोषाच्च ॥ २९ ॥

---

रत्नप्रभा ।

न प्रतिपाद्यते इत्यसद्वादोऽयमिदम् । अतो विवर्तवादे न कश्चिद्दोष इत्युपसंहरति–तस्मादिति ॥ ॥ २७ ॥ पूर्वरूपानाशेनावस्थान्तरं परिणामः । यथा दुग्धस्य दधिभावः । पूर्वरूपानुपमर्देनावस्थान्तरं विवर्तः । यथा शुक्ते रजतभावः । तत्र ब्रह्मणो विवर्तोपादानत्वं स्वप्नमायादृष्टान्तेन द्रढयन् मायावादं सूचयति सूत्रकारः–आत्मनि चेति ॥ रथयोगाः अश्वाः ॥ २८ ॥ किञ्च कृत्स्नप्रसक्त्यादीनां साङ्ख्यादिपक्षेऽपि दोषत्वात्तत्रास्माभिरनुद्भावनीयत्वम् । यश्चोभयोः समो दोष इति न्यायादित्याह सूत्रकारः–स्वपक्षेति ॥ प्रधानस्य निरवयवत्वे कृत्स्नप्रसक्तिः । सावयवत्वे च निरवयवश्रा-

भामती ।

र्थवादवदप्रमाणं शब्दः स्यादिति चोद्यार्थः । परिहारः सुगमः ॥ २६ ॥ २७ ॥ आत्मनि चैवं विचित्राश्च हि । अनेन सूचितो मायावादः । स्वप्नदृशा हि मनसैव स्वरूपानुपमर्देन रथादीन् सृजति ॥ २८ ॥ स्वपक्ष-

आनन्दगिरीय–न्यायनिर्णयः ।

शङ्क्याऽऽह–सर्वेति । अद्वितीयप्रतिपादनपरतया सृष्टिवाक्यानां स्वार्थविशेषे तात्पर्याभावान्नास्ति सृष्टौ तात्पर्यमित्यर्थः । ब्रह्मात्मप्रतिपत्तौ फलावगतिमुदाहरति–स एष इति । विवर्तवादे दोषाभावमुपसंहरति–तस्मादिति ॥ २७ ॥ उक्तं विवर्तवादं सूत्रकाराभिप्रेतत्वेन स्पष्टयति–आत्मनीति । सूत्रार्थं विवक्षन् दृष्टान्तमज्ञानाद्विवर्तवादे विवादो नास्तीत्याह––अपि चेति । विवादस्याकर्तव्यत्वे हेतुमाह–यत इति । दृष्टान्तदार्ष्टान्तिकयोरैकार्थ्येन विशिनष्टि–स्वप्नदृशीति । स्वप्नस्य स्मृतित्वात्पुरुषगतादिदृष्टा सृष्टिरेव तत्र नास्तीति कुतोऽस्य दृष्टान्ततेत्याशङ्क्याह श्रुत्यन्तरं तत्र स्वप्नस्यास्मृतित्वमभिप्रेत्याऽऽह–पठ्यत इति । स्वप्ने रथादीनामभावं वक्तुं तत्रत्याभावस्यावश्यमाह–अथेति । आत्मनि चेति न्यायात् विचित्राश्च हीति व्याचष्टे––लोकेऽपीति । दृष्टान्तं सूत्रस्थं व्याकुर्वन्दार्ष्टान्तिकमाह–तथेति । इतिशब्दो विवर्तवादसमाप्त्यर्थः ॥ २८ ॥ 'यश्चोभयो' इति न्यायेन कृत्स्नप्रसक्त्यादीनामनुद्भाव्यत्वं दर्शयति–स्वपक्षेति ।

१ "यश्चोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे" इति न्यायः ।

परेषामप्येष समानः स्वपक्षे दोषः । प्रधानवादिनोऽपि हि निरवयवमपरिच्छिन्नं शब्दादिहीनं प्रधानं सावयवस्य परिच्छिन्नस्य शब्दादिमतः कार्यस्य कारणमिति स्वपक्षः । तत्रापि कृत्स्नप्रसक्तिर्निरवयवत्वात्प्रधानस्य प्राप्नोति । निरवयवत्वाभ्युपगमकोपो वा ॥ ननु नैव तैर्निरवयवं प्रधानमभ्युपगम्यते । सत्त्वरजस्तमांसि हि त्रयो गुणाः । तेषां साम्यावस्था प्रधानम् । तैरेवावयवैस्तत्सावयवमिति ॥ नैवंजातीयकेन सावयवत्वेन प्रकृतो दोषः परिहर्तुं पार्यते ॥ यतः सत्त्वरजस्तमसामप्येकैकस्य समानं निरवयवत्वम् । एकैकमेव चेतरद्वयानुगृहीतं सजातीयस्य प्रपञ्चस्योपादानमिति समानत्वात्स्वपक्षे दोषप्रसङ्गस्य ॥ तर्काप्रतिष्ठानात्सावयवत्वमेवेति चेत् ॥ एवमप्यनित्यत्वादिदो-

रत्नप्रभा ।

भ्युपगमविरोध इत्यत्र शङ्कते—नन्विति ॥ किं साम्यावस्था गुणानां विकारः समुदायो वा आद्ये तस्या न मूलप्रकृतित्वम् । विकारत्वात् । द्वितीये प्रपञ्चाभावः । समुदायस्यावस्तुत्वेन मूलाभावात् । अथ निरवयवा गुणा एव विविधपरिणामिनः प्रकृतिरिति चेत् । तर्हि कृत्स्नप्रसक्तिर्मूलोच्छेदो दुर्वार इत्यभिप्रेत्य परिहरति—नैवमित्यादिना ॥ इति यतः, अतः समानत्वात्त्वया पर्यनुयोज्या इत्यन्वयः । प्रत्येकं सत्त्वादिकमितरगुणद्वयसचिवं निरवयवं यद्युपादानं तर्हि कृत्स्नस्योपादानस्य कार्यरूपत्वप्रसक्तेः मूलोच्छेद इत्युक्ते निरवयवत्वसाधकतर्कस्याभासत्वाद्गुणानां सावयवत्वमेव परिणामित्वेन मृदादिवत् । अतो न कृत्स्नप्रसक्तिरेकदेशपरिणामसम्भवादिति शङ्कते—तर्केति ॥ एतद्दोषाभावेऽपि दोषान्तरं स्यादिति परिहरति—एवमपीति ॥ ननु गुणानामवयवास्तन्तुवदारम्भका न भवन्ति । किन्तु कार्यवैचित्र्यानुमि-

भामती ।

दोषाच्च । चोदयति—ननु नैवेति । परिहरति—नैवंजातीयकेनेति । यद्यपि समुदायः सावयवस्तथापि प्रत्येकं सत्त्वादयो निरवयवाः । न खल्वसम्भूय सत्त्वमात्रं परिणमते न रजस्तमसी इति । सर्वेषां सम्भूयपरिणामाभ्युपगमात् । प्रत्येकं चानवयवानां कृत्स्नपरिणामे मूलोच्छेद-

आनन्दगिरीय-न्यायनिर्णय ।

सूत्राक्षराणि व्याचष्टे—परेषामिति । तथा च ब्रह्मवादिनि निर्दोषेणानुज्ञा पततीति शेषः । ननु प्रधानवादे दोषसाम्यं यत्तु तत्पक्षमनुभाषते—प्रधानेति । दोषसाम्यमधुना दर्शयति—तत्रापीति । प्रधानं हि महदाद्याकारेण परिणममानं साकल्येन वा परिणमेत एकदेशेन वा । प्रथमे निरवयवस्य प्रधानस्य कृत्स्नस्यैव कार्याकारेण परिणतत्वादवशिष्टस्याभावात्तदाश्रितस्य कार्यस्यायोगात्कार्यं कारणं चेत्युभयमपि समुच्छिद्येत । द्वितीये प्रधानस्य निरवयवत्वस्वीकारो विरुध्येतेत्यर्थः । दोषद्वयं परिहर्तुं शङ्कते—नन्विति । निरवयवत्वानुपगमं स्फुटयितुं प्रधानस्वरूपमनुवदति—सत्त्वेति । कथमेतावता निरवयवत्वानभ्युपगमस्तत्राऽऽह—तैरिति । सावयवत्वे च प्रधानस्यैकदेशेन परिणामोऽवस्थानं चैकदेशेनेत्यङ्गीकारान्न कृत्स्नप्रसक्त्यादिदोषावकाशोऽस्तीत्यर्थः । उक्तं सावयवत्वमङ्गीकृत्य परिहरति—नेत्यादिना । तत्र हेतुमाह—यत इति । समुदायस्य सावयवत्वेऽपि प्रत्येकं सत्त्वादीनां निरवयवत्वात्तेषां च परिणामस्वीकारात्कृत्स्नपरिणामे मूलोच्छित्तिरेकदेशपरिणामे सावयवत्वमिति दोषद्वयं प्रधानवादे दुर्वारमित्यर्थः । सम्भूय सत्त्वादीनां परिणामस्वीकारात् दोषद्वयमित्याशङ्क्याऽऽह—एकैकमेवेति । समुदायस्यैव परिणामित्वे कार्यवैचित्र्यासिद्धिरिति भावः । एवं प्रधानवादे कृत्स्नप्रसक्त्यादिदोषसाम्यात्तेन ब्रह्मवादिनि तदुद्भावनीयमित्युपसंहरति—समानत्वादिति । तर्काप्रतिष्ठानन्यायेन निरवयवत्वसाधकतर्कस्याप्रतिष्ठितत्वात्प्रधानस्य सावयवत्वमेवेति शङ्कते—तर्केति । अभ्युपेत्यापि सावयवत्वं दूषयति—एवमपीति । आदिशब्देन घटादिवत्कारण-

पप्रसङ्गः ॥ अथ शक्तय एव कार्यवैचित्र्यसूचिता अवयवा इत्यभिप्रायः। तास्तु ब्रह्मवादिनोऽप्यविशिष्टाः। तथाऽणुवादिनोऽप्यणुरण्वन्तरेण संयुज्यमानो निरवयवत्वाद्यदि कार्त्स्न्येन संयुज्येत, ततः प्रथिमानुपपत्तेरणुमात्रत्वप्रसङ्गः ॥ अथैकदेशेन संयुज्येत, तथापि निरवयवत्वाभ्युपगमकोप इति स्वपक्षेऽपि समान एष दोषः ॥ समानत्वाच्च नान्यतरस्मिन्नेव पक्षे उपक्षेप्तव्यो भवति ॥ परिहृतस्तु ब्रह्मवादिना स्वपक्षे दोषः ॥ २९ ॥ इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

---

रत्नप्रभा ।

तास्तद्वतावरशक्तय इत्याशङ्क्य मायिकशक्तिभिरवयवोऽपि सावयवत्वं तुल्यमित्याह—अथेत्यादिना ॥ अणुवादेऽपि दोषसाम्यमाह—तथेति ॥ सावयवदोषः समान इति सम्बन्धः ॥ निरवयवयोः परमाण्वोः संयोगो व्याप्यवृत्तिरव्याप्यवृत्तिर्वा ? आद्ये तत्कार्यस्य द्व्यणुकस्यैकपरमाणुमात्रत्वापत्तिः । प्रथिम्नोऽधिकपरिमाणस्यानुपपत्तेः । न ह्यणोरण्वन्तरेणोपर्यधः पार्श्वेनश्च व्याप्तौ तन्तोऽधिकद्रव्यं सम्भवति । द्वितीये परमाण्वोः सावयवत्वापत्तिरित्यर्थः । ननु त्वं चोर इत्युक्ते त्वमपि चोर इतिवद्दोषसाम्योक्तिरयुक्तेत्यत आह—परिहृतस्त्विति ॥ उक्तं हि मायावादे स्वमतस्य सर्वं सामञ्जस्यम् । अतो निरवयवं ब्रह्मणि

भामती ।

प्रसङ्गः । एकदेशपरिणामे वा सावयवत्वमनिष्टं प्रसज्येत । तथाणुवादिनोऽपीति । वैशेषिकाणां ह्यणुभ्यां संयुज्य द्व्यणुकमेकमारभ्यते, तैस्त्रिभिर्द्व्यणुकैस्त्र्यणुकमेकमारभ्यत इति प्रक्रिया । तत्र द्वयोरण्वोरनवयवयोः संयोगस्तावत् व्याप्नुयात् । अव्याप्नुवन्त्या तत्र न वर्तेत । न ह्यस्ति सम्भवः स एव तदानीं तत्र वर्तेते न वर्तते चेति । तथा चोपर्यधःपार्श्वस्थाः षडपि परमाणवः समानदेशा इति प्रथिमानुपपत्तेरणुमात्रः पिण्डः प्रसज्येत । अव्यापने वा षडवयवः परमाणुः स्यादित्यनवयवत्वव्याघातः । अवश्यं च सावयवत्वमुपेत्य, तथा ह्यनन्तावयवत्वेन सुमेरुराजसर्षपयोः समानपरिमाणत्वप्रसङ्गः । तस्मात् समानो दोषः । आपातमात्रेण साम्यमुक्तम्, परमार्थतस्तु मायिके परिणामे वा कार्यकारणभावे वैभाषिकाणामेव दुर्वारो दोषो न पुनरस्माकं मायावादिनामित्याह—परिहृतस्त्विति ॥२९॥ (९)॥ विचित्रशक्तियुक्तं ब्रह्म, तत्र श्रुत्युपन्या-

आनन्दगिरीय—न्यायनिर्णयः ।

स्यासम्भवोऽपि गृहीतः । घटादीनामिव द्रव्यान्तरत्वेन प्रधानस्य सावयवत्वानभ्युपगमादनेकधर्मवत्तया तद्विकाराणामनित्यत्वादिदोषप्रसक्तिरित्याह—अथेति । प्रसङ्गोऽपि कार्यवैचित्र्यसूचितविचित्रशक्तिरूपावयवोपगमादुक्तदोषसमाधिरित्याह—ता इति । प्रधानवादिनो दोषसाम्यमुक्त्वा परमाणुवादिनोऽपि तत्साम्यमाह—तथेति । अणुवादिनोऽपि समान एव दोष इत्यत्र सम्बन्धः । द्वाभ्यामणुभ्यां संयुज्यमानाभ्यां द्व्यणुकमारभ्यते त्रिभिर्द्व्यणुकैः संयुक्तैस्त्र्यणुकं त्र्यणुकैः संयुक्तैश्चतुरणुकमित्यस्यां प्रक्रियायामणुरण्वन्तरेण संयुज्यमानः कार्त्स्न्येन वा संयुज्येत एकदेशेन वेति विकल्प्याऽऽद्यमनूद्य दूषयति—अणुरिति । कार्त्स्न्येन संयोगे तयोरभिन्नदेशत्वात् परमाण्वन्तरस्य मणित्वात् तदारब्धे द्व्यणुके परमाणोरधिकपरिमाणानारम्भात् परिमाणाभावप्रसङ्गाद्द्व्यणुकादिपरिमाणानारम्भकत्वविरोधः स्यादित्यर्थः । द्वितीयमनूद्य प्रत्याह—अथेति । तदेव परमाणुवादिष्वपि प्रागुक्तदोषसाम्यात् तैरपि ब्रह्मवादिनि तदुद्भावनमनुचितमित्याह—इति स्वपक्षेऽपीति । त्वं चोर इत्युक्ते त्वमपि चोर इतिवदन्यस्य दोषोद्भावने परस्यापि तदुद्भावनमात्रेण न स्वविशुद्धिर्विशुद्धिर्व्यवहारे दृष्टा । व. परिहार- म पुनरस्माकमर्थादित्याशङ्क्याऽऽह—समानत्वाच्चेति । आपाततः साम्यमुक्तं, परमार्थतस्तु कार्यकारणभेदवादिनामेव वाच्यो दोषो नास्माकं विवर्तवादिनां वार्त्तारम्भणमात्रत्वादित्याह—परिहृतस्त्विति ॥ २९ ॥ ( ९ ) ॥ दुर्निरूपं प्रधानं ब्रह्मणो विचित्र-

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ ( १० ) ॥

एकस्यापि ब्रह्मणो विचित्रशक्तियोगादुपपद्यते, विचित्रो विकारप्रपञ्च इत्युक्तम् ॥ तत्पुनः कथमवगम्यते विचित्रशक्तियुक्तं परं ब्रह्मेति ॥ तदुच्यते ॥ सर्वोपेता च तद्दर्शनात् । सर्वशक्तियुक्ता च परा देवतेत्यवगन्तव्यम् ॥ कुतः ॥ "तद्दर्शनात्" तथाहि–दर्शयति श्रुतिः सर्वशक्तियोगं परस्या देवतायाः–" सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" [ छां० ३ । १४ । ४ ] "सत्यकामस्सत्यसङ्कल्पः" [ छां० ८ । ७ । १ ] "यः सर्वज्ञः सर्ववित्" [ मुण्ड० १ । १ । ९ ] "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" [ बृ० ३ । ८ । ९ ] इत्येवञ्जातीयका ॥ ३० ॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

रत्नप्रभा ।

समन्वयस्याविरोध इति सिद्धम् ॥ २९ ॥ ( ९ ) ॥ सर्वोपेता । मायाशक्तिमतो ब्रह्मणो जगत्सर्गं वदतः समन्वयस्य अशरीरस्य न मायेति न्यायेन विरोधोऽस्ति न वेति सन्देहे न्यायस्य अनाभासत्वादस्तीति पूर्वपक्षे पूर्वोक्तशक्तिमत्त्वसमर्थनादेकविषयत्वं सङ्गतिं वदन् सिद्धान्तम व्याचष्टे–एकस्येत्यादिना ॥ पूर्वोत्तरपक्षयोर्विरोधाविरोधौ फलमित्युक्तमेवापादसमाप्तेरवगन्तव्यम् । अभ्यात्तः अभिव्याप्तः । अवाकी वागिन्द्रियशून्यः । अनादरः निष्कामः ॥ ३० ॥ पूर्वपक्षन्यायमनूद्य दूषयति–विकरणत्वादिति ॥ देहादिचेतनानां शक्तानामपि देहाभिमाने सत्येव कर्तृत्वं दृष्टम् । तदभावे सुषुप्तौ तन्न दृष्टम् अतो ब्रह्मणः शक्तस्याप्यदेहत्वान्न कर्तृत्वम् । नाप्यदेहस्य शक्तिः सम्भवतीति शङ्कार्थः । निष्करणस्य जीवस्य कर्तृत्वासम्भवेऽपीश्वरस्य सम्भवतीति "देवादिवदपि लोके" [ ब्र० सू० २ । १ । २५ ] इत्यत्रोक्तम् । अशरीरस्य कल्पितस्य मायाश्रयत्वायोगात् निर्विशेषनिष्कारस्यैव मायावि-

भामती ।

सपर सूत्रम्–सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ एतदाक्षेपसमाधानपरं सूत्रम्–विकरणत्वान्नेति चेत्तदुक्तम् । कुलालादिभ्यस्तावद्बाह्यकरणापेक्षेभ्यो देवादीनां बाह्यानपेक्षाणामान्तरकरणापेक्षिणां प्रमाणेन दृष्टो यथा विशेषो नापह्नोतुं शक्यः, यथा तु जाग्रद्दृष्टबाह्यकरणापेक्षायास्तदनपेक्षान्तःकरणमात्राधीना दृष्टा स्वप्ने रथादिसृष्टिरशक्यापह्नोतुम्, एवं सर्वशक्तेः परस्या देवताया आन्तरकरणानपेक्षाया जगत्सर्जन

आनन्दगिरीय–न्यायनिर्णयः ।

शक्तियुक्तत्वाद्युक्तं कारणत्वमित्युक्तम् । इदानीं तस्य विचित्रशक्तित्वे प्रमाणमाह–सर्वोपेता चेति । मायाशक्तिमतो ब्रह्मणो जगत्सर्गे श्रुतिसमन्वयो विषयस्तस्य किमशरीरस्य नास्ति मायेति न्यायेन विरोधोऽस्ति न वेति तन्न्यायस्याभासत्वाभावादस्तीति संदेहे सङ्गतिमाह–एकस्येति । प्रमाणप्रश्नपूर्वकं तद्वचनावतारं सूत्रमादत्ते–तत्पुनरिति । पूर्वोत्तरपक्षयोः फलानि पूर्ववद् द्रष्टव्ये । सूत्राक्षराणि व्याचष्टे–सर्वेति । अवगतिहेतु प्रश्नपूर्वकमाह–कुत इति । सिद्धान्तहेतुं नानाविधश्रुत्युपन्यासेन विभजते–तथा हीति ॥ ३० ॥ पूर्वपक्षमनुभाष्य दूषयति–विकरणत्वादिति । यद्यप्यन्तर्यामिविषये जगदुपयोगी नियन्तृत्वमुक्तं कार्यकरणविहीनोऽपि नियन्तृत्वमुक्तं तथाऽपि कार्यकरणविहीनो मायावत्त्वं परं न सम्भवतीति विवक्षित्वा कुलालादीनां कार्यकरणवतां घटादिनिर्माणदर्शनादस्यागमवर्जितस्य नाधिष्ठातृत्वेन कारणत्व-

स्यादेतत्-विकरणां परां देवतां शास्ति शास्त्रम्-"अचक्षुष्कमश्रोत्रमवागमनाः" [ बृ० ३ । ८ । ८ ] इत्येवञ्जातीयकम् । कथं सा सर्वशक्तियुक्तापि सती कार्याय प्रभवेत् । देवादयो हि चेतनास्सर्वशक्तियुक्ता अपि सन्त आध्यात्मिककार्यकरणसम्पन्ना एव तस्मैतस्मै कार्याय प्रभवन्तो विज्ञायन्ते ॥ कथं च "नेतिनेति" [ बृ० ४ । ५ । १५ ] इति प्रतिषिद्धसर्वविशेषाया देवतायास्सर्वशक्तियोगस्सम्भवेदिति चेत् ॥ यदत्र वक्तव्यं तत्पुरस्तादेवोक्तम् । श्रुत्यवगाह्यमेवेदमतिगम्भीरं परं ब्रह्म । न तर्कावगाह्यं न च यथैकस्य सामर्थ्यं दृष्टं, तथान्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽस्तीति ॥ प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणस्सर्वशक्तियोगस्सम्भवतीत्येतदप्यविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव ॥ तथा च शास्त्रम् "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" [ श्वेता० ३।१९ ] इत्यकरणस्यापि ब्रह्मणस्सर्वसामर्थ्ययोगं दर्शयति ॥३१॥

॥ इति सर्वोपेताधिकरणम् ॥ १० ॥

## न प्रयोजनवत्त्वात् ॥ ३२ ॥ ( ११ ) ॥

---

रत्नप्रभा ।

ष्ठानत्व युक्तमिति समाधानार्थः ॥ ३१ ॥ ( १० ) ॥ न प्रयोजनवत्त्वादिति ॥ परिहृताद् ब्रह्मणो

भामती ।

श्रूयमाणं न सामान्यतो दृष्टमात्रेणापह्नवमर्हतीति ॥३१॥(१०)॥ न प्रयोजनवत्त्वात् । न तावदुन्मत्तवदस्य मतिविभ्रमाज्जगत्प्रक्रिया, भ्रान्तस्य सर्वज्ञत्वानुपपत्तेः । तस्मात् प्रेक्षावतानेन जगत् कर्तव्यम् । प्रेक्षाव-

आनन्दगिरीय—न्यायनिर्णयः ।

मिति चोद्यं विवृणोति—स्यादेतदिति । ब्रह्मणः सर्वशक्तित्वादकार्यकरणत्वेऽपि कारणत्वमुपपन्नमित्याशङ्क्याऽऽह—कथं सेति । न हि कार्यकरणरहितस्य मुक्तस्य मायाशक्तिमत्त्वं तद्वत्त्वेऽपि न कार्यक्षमत्वं मुक्तवदित्यर्थः । सर्वशक्तियोगाद्देवादिवद्ब्रह्मणः संभवति विचित्रकार्यकर्तृत्वमित्याशङ्क्याह—देवादय इति । विज्ञायन्ते मन्त्रार्थवादादिष्विति शेषः । कथं सा सर्वशक्तियुक्ताऽपीत्यत्रापि सूचितमर्थं स्फोरयति—कथं चेति । 'तदुक्तम्' इति, सूत्रावयवेन परिहरति—यदत्रेति । किं तदुक्तमित्यपेक्षायां नविलक्षणत्वाधिकरणादावुक्तं स्मारयति—श्रुतीति । यत्तु कुलालादीनां कार्यकरणवतामेव मृदाद्यधिष्ठातृत्वोपलम्भात्करणहीनस्य नाधिष्ठातृत्वेन कारणत्वमिति तदपि परिहृतमित्याह—न चेति । न हि कार्यकरणविरहिणः सुषुप्तवदकार्यकरत्वं शक्यं नियन्तुं समुत्थानसमये शरीराद्यभिमानशून्यस्य देहेन्द्रियाद्युपादानव्यापारसत्त्वप्रतिपत्त्या दृष्टान्तस्य साध्यविकलत्वादिति भावः । यत्तु ब्रह्मणो मायाशक्तिमत्त्वं मुक्तवदशरीरत्वादयुक्तमिति तदपि पुरस्तादेव परास्तमित्याह—प्रतिषिद्धेति । परमार्थतो व्यवहारतो वा मायाशक्तिमत्त्वाभावः साध्यते । नाऽऽद्यः, सिद्धसाधनत्वात् न द्वितीयः, मायायाश्चिन्मात्रे प्रतीतिसिद्धत्वात् । न चाशरीरोऽहमिति प्रतीतिर्जीवमधिकरोति तस्य ब्रह्मानतिरेकात्कल्पितस्य चाविद्यामयत्वेन विषयत्वायोगादिति भावः । किंच, मायाविनो देहेन्द्रियवतो बाह्यं हेतुमनपेक्ष्य कार्यकरत्वदर्शनात्कुलालादीनां च तथाविधानामेव बाह्यसाधनव्यपेक्षाणामर्थक्रियाकारित्वाच्च दृष्टान्तव्याप्त्यभावादन्तरेणापि शरीरादिना प्रवृत्ति-सामर्थ्यसिद्धिरित्यपि च श्रुत्यनुमानसम्पाऽऽगमसिद्धं दर्शयति—तथा चेति ॥ ३१ ॥ ( १० ) ॥

एवं शुद्धस्यापि ब्रह्मणः सर्वशक्तियुक्तत्वं भवति कारणत्वमिति प्रयोजनाभिसन्ध्यभावादकर्तृत्वमित्याशङ्क्याह—न प्रयोजनवत्त्वादिति । परिपूर्णस्यास्य जगत्सर्गे मुख्यप्रयोजनवत्त्वं विषयः न हि फलं विना प्रवृत्तिर्न

अन्यथा पुनश्चेतनकर्त्तृकत्वं जगत आक्षिपति-न खलु चेतनः परमात्मेदं जगद्बिम्बं विरचयितुमर्हति ॥ कुतः ॥ प्रयोजनवत्वात्प्रवृत्तीनाम् ॥ चेतनो हि लोके बुद्धिपूर्वकारी पुरुषः प्रवर्तमानो न मन्दोपक्रमामपि तावत्प्रवृत्तिमात्मप्रयोजनानुपयोगिनीमारभमाणो दृष्टः किमुत गुरुतरसंरम्भाम् ॥ भवति च लोकप्रसिद्ध्यनुवादिनी श्रुतिः "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति । आत्मनस्तु कामाय सर्वं प्रियं भवति" [बृ० २ । ४ । ५] इति ॥ गुरुतरसंरम्भा चेयं प्रवृत्तिः यदुच्चावचप्रपञ्चं जगद्बिम्बं विरचयितव्यम् ॥ यदीयमपि प्रवृत्तिश्चेतनस्य परमात्मन आत्मप्रयोजनोपयोगिनी परिकल्प्येत, परितृप्तत्वं परमात्मनः श्रूयमाणं बाध्येत ॥ प्रयोजनाभावे वा प्रवृत्त्यभावोऽपि स्यात् ॥ अथ चेतनोऽपि सन्नुन्मत्तो बुद्ध्यपराधादन्तरेणैवात्मप्रयोजनं प्रवर्तमानो दृष्टः । तथा परमा-

रत्नप्रभा ।

जगत्सर्गं वदन् समन्वयो विषयः । स किमभ्रान्तश्चेतनो यः स निष्फलं वस्तु न रचयतीति न्यायेन विरुध्यते न वेति सन्देहे पूर्वसंदेहस्यापि श्रुतिबलात् शक्तोऽन्यथा कर्तृत्वमुक्तम् । तदाक्षेपसङ्गत्या पूर्वपक्षसूत्रं व्याचष्टे-अन्यथेत्यादिना ॥ ईश्वरस्य फलाभावेऽपि परप्रयोजनाय सृष्टौ प्रवृत्तिरस्तिति यादवप्र श्रुतिमाह-भवति चेति ॥ या प्रेक्षावत्प्रवृत्तिः सा स्वफलार्थेति लोकप्रसिद्धिः । न च दयालुप्रवृत्तौ व्यभिचारः । तस्या अपि परदुःखासहनप्रयुक्तस्वचित्तव्याकुलतानिवृत्त्यर्थत्वादिति भावः । किञ्च गुरुतरायासस्य फलं वाच्यमित्याह-गुरुतरेति ॥ तर्हि अस्मदीयस्यापि प्रवृत्तिः स्वार्थेत्यत आह-यदीयमपीति ॥ अस्वार्थत्वे प्रवृत्त्यभावः पूर्वोक्तः स्यादित्यर्थः । ईश्वरः प्रेक्षावान्न भवतीत्याशङ्क्य श्रुतिविरोधमाह-अथेत्यादिना ॥ बुद्धेरपराधो विवेकाभावः ॥ ३२ ॥ उक्तन्यायस्य शङ्का लीलायां

भामती ।

तथ प्रवृत्तिः स्वपरहिताहितप्राप्तिपरिहारप्रयोजना सती नाप्रयोजनाऽल्पायासापि सम्भवति, किं पुनरपरिमेयानेकविशेषानन्तप्रपञ्चजगद्बिम्बविरचना महाप्रयासा । अत एव लीलापि परास्ता । अल्पायाससाध्या हि सा । न चेयमप्यप्रयोजना, तस्या अपि सुखप्रयोजनवत्त्वात् । तादर्थ्येन वा प्रवृत्तौ तदभावे कृतार्थत्वानुपपत्तेः । परेषां चोपकार्याणामभावेन तदुपकारार्था अपि प्रवृत्त्ययोगात् । तस्मात् प्रेक्षावत्प्रवृत्ति

आनन्दगिरीय-न्यायनिर्णय ।

सृष्टं यद्भ्रान्तचेतनत्वाद्विनिश्चितपुरुषार्थादिति न्यायेन विरुध्यते न वेति पूर्वसंदेह सदृशे पूर्वपक्षसूत्रतात्पर्यमाह-अन्यथेति । पादादिसङ्गतिरत्र पूर्ववदुन्नेया । सूत्राक्षराणि व्याकुर्वन्नञोऽर्थमाह-न खल्विति । तत्र प्रश्नपूर्वकं हेतुमादाय व्याचष्टे-कुत इति । भ्रान्तस्याबुद्धिपूर्वकारिण स्वपरप्रयोजनानुपयोगिन्यपि प्रवृत्तिः स्यादिति विशिनष्टि-बुद्धिपूर्वकारीति । लीलादौ फलाभावेऽपि प्रवृत्तिरित्याशङ्क्य तत्रापि तात्कालिकसुखस्य फलत्वाभावेऽपि फलमस्त्येवेति मत्वाऽऽह-न मन्देति । या चेतनस्याभ्रान्तस्य प्रवृत्तिः सा फलाभिसन्धिपूर्विकेति व्याप्तिमुक्त्वा वैमुख्यस्याप्यविना सूचितं दर्शयति-किमुतेति । मन्दोद्योगायाससाध्यापि फलशून्यदर्शना महायाससाध्यस्य सूचितं न फलेत्यर्थः । फलाभिसन्धिपूर्विका बुद्धिपूर्वकारिप्रवृत्तिरित्यत्र श्रुतिमनुकूलयति-भवति चेति । प्रकृत्यायाससाध्या जगद्विरचनायां न फलाभिसन्धिराह-गुरुतरेति । अस्तु तर्हि फलाभिसन्धिपूर्विकेयमपि प्रवृत्तिरीश्वरस्य तस्य परस्य वा फलमुद्दिश्येति विकल्प्याऽऽद्ये दोषमाह-यदीति । अस्मदादीनां गुरुतरसंरम्भाऽपीयं प्रवृत्तिरीश्वरस्यानायासमात्रा न प्रयोजनपूर्विकेत्याशङ्क्य न च जगत्कारणं साक्षात्परस्य वा स्वकार्याकृतार्थत्वाभ्युपगमात् द्वितीये दोषमाह-प्रयोजनाभावे वेति । इतरेण शङ्कया दूषयति-अथेत्यादिना । बुद्ध्यपराधो विवे-

ब्रूमः । "वैषम्यनैर्घृण्ये न" ईश्वरस्य प्रसज्येते ॥ कस्मात् ॥ "सापेक्षत्वात्" । यदि हि निरपेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीते, स्यातामेतौ दोषौ वैषम्यं नैर्घृण्यं च ॥ न तु निरपेक्षस्य निर्मातृत्वमस्ति । सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते॥ किमपेक्षत इति चेत् ॥ धर्माधर्मावपेक्षत इति वदामः ॥ अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः । ईश्वरस्तु पर्जन्यवद्द्रष्टव्यः । यथा हि पर्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणं भवति, व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि कारणानि भवन्ति, एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणं भवति देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवासाधारणानि कर्माणि कारणानि भवन्ति ॥ एवमीश्वरः सापेक्षत्वान्न वैषम्यनैर्घृण्याभ्यां दुष्यति ॥ कथं पुनरवगम्यते । सापेक्ष ईश्वरो नीचमध्यमोत्तमं संसारं निर्मिमीत इति । "तथाहि दर्शयति" श्रुतिः—"एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते" [ कौषी० ३ । ८ ] इति ॥ "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" [ बृ० ४ । ४ । ५ ] इति च ॥ स्मृतिरपि प्राणिकर्मविशेषा-

रत्नप्रभा ।

रागीश्वरत्वानपायात् । ननु तर्हि धर्माधर्माभ्यामेव विचित्रा सृष्टिरस्तु, किमीश्वरेणेत्यत आह—ईश्वरस्त्विति ॥ साधारणहेतुसत्त्वेऽप्यसाधारणहेतोः कार्यकारित्वान्नेश्वरवैयर्थ्यम् । अन्यथा पर्जन्यवैयर्थ्यप्रसङ्गादिति भावः । यं जनम् । उन्निनीषते ऊर्ध्वं नेतुमिच्छति तं साधु कारयति, एष ईश्वर इत्यन्वयः ॥

भामती ।

न निग्रहानुग्रहस्य एव सामर्थ्यम् । एवं ह्यसावसमञ्जसः स्याद्यदि प्राणभृतां कर्माण्यननुगृह्णीयात् कल्याणकारीणि च निगृह्णीयात् । न चैतदस्ति । तस्मान्न वैषम्यदोषः । अत एव न नैर्घृण्यमपि यतः सर्वान् प्राणभृतः । स हि प्राणभृत्कर्माशयानां वृत्तिनिरोधमप्रयच्छन् तमनिरुन्धन्ननुग्रहकारी स्यात् । न च कर्मापेक्षायामीशस्य ऐश्वर्यव्याघातः । न हि सेवादिकर्मभेदापेक्षः फलभेदप्रदः प्रभुरप्रभुर्भवति । न च 'एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमधो

आनन्दगिरीय-न्यायनिर्णयः ।

कस्मादिति । व्यतिरेकद्वारा विभजते—यदि हीति । नैरपेक्ष्यमेव स्पष्टयति—केवल इति । उक्तमेवार्थमन्वयमुखेनाचष्टे—सापेक्षो हीति । सापेक्षत्वे प्रयोजकापेक्षितं जिज्ञासते—किमिति । सेवादिभेदापेक्षया राजादीनां फलदानेऽपि नानीशत्वं दृष्टमिति मत्वाह—धर्मेति । सापेक्षत्वे फलं यदुक्तं तन्नयति—अत इति । विषमा सृष्टिर्धर्मादिनिमित्ता चेत्तर्हि धर्माधर्मावेव कारणमस्त्विति शङ्कायामाह—ईश्वरस्त्विति । दृष्टान्तं विवृणोति—यथा हीति । व्रीहियवादिवैषम्ये तर्हि किं कारणमित्याशङ्क्याह—व्रीहीति । चेतनत्वे सत्यनन्यापेक्षत्वादिति हेतुर्व्यभिचारनिवृत्त्यर्थो दार्ष्टान्तिकस्तस्मात्—एवमिति । सेवादिभेदापेक्षया परेषामर्थानर्थौ कुर्वति राजादावनैकान्तिको हेतुरिति भावः । सापेक्षत्वफलमुपसंहरति—एवमिति । तथा चाऽप्रामाणिकत्वादीश्वरस्यासापेक्षत्वं नैव प्रष्टोऽस्मीति भावः । सापेक्षत्वेऽभ्युपगते विषमसृष्टिहेतौ मानं पृच्छति—कथमिति । श्रुत्युदाहरणेनोत्तरमाह—तथाहीति । स्मृतिरपि श्रौतकर्मानुसारिणी या—स्मृतिरपीति । न च साध्वसाधुनी कर्मणी कारयिता सर्वो नरको वा प्राणिनो सर्ज्ञाभ्यां वैषम्यादिना कथ

पेक्षमेवेश्वरस्यानुग्रहीतृत्वं निग्रहीतृत्वं च दर्शयति "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" [ भ० गी० ४ । ११ ] इत्येवञ्जातीयका ॥ ३४ ॥

## न कर्माविभागादिति चेन्नाऽनादित्वात् ॥ ३५ ॥

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [ छां० ६ । २ । १ ] इति प्राक्सृष्टेरविभागावधारणान्नास्ति कर्म । यदपेक्ष्य विषमा सृष्टिः स्यात । सृष्ट्युत्तरकाले हि शरीरादिविभागापेक्षं कर्म, कर्मापेक्षश्च शरीरादिविभाग इतीतरेतराश्रयत्वं प्रसज्येत ॥ अतो विभागादूर्ध्वं कर्मापेक्ष ईश्वरः प्रवर्ततां नाम । प्राक् तु विभागाद्वैचित्र्यनिमित्तस्य कर्मणोऽभावात्तुल्यैवाद्या सृष्टिः प्राप्नोतीति चेत ॥ नैष दोषः ॥ अनादित्वात संसारस्य । भवेदेष दोषो यद्यादिमान्संसारः स्यात । अनादौ तु संसारे बीजाङ्कुरवद्धेतुहेतुमद्भावेन कर्मणः सर्गवैषम्यस्य च प्रवृत्तिर्न विरुध्यते॥३५॥

रत्नप्रभा ।

न च कञ्चिज्जनं साधु, कञ्चिदसाधु कर्म कारयतो वैषम्यं तदवस्थमिति वाच्यम् । अनादिपूर्वार्जितसाध्वसाधुवासनया स्वभावेन जनस्य तत्तत्कर्मसु प्रवृत्तावीश्वरस्य साधारणहेतुत्वात् । अतोऽनवद्य ईश्वर इति भावः ॥ ३४ ॥ प्रथमसर्गस्य वैषम्यहेतुकर्माभावादेकरूपत्वं स्यात, तथा तदुत्तरकल्पानामपीत्याक्षिप्य समाधत्ते सूत्रकारः—न कर्मेति ॥ प्रथमसृष्टेः पश्चाद्धर्मादिकर्मेदं न वैषम्यमित्याशङ्क्यान्योन्याश्रयमाह—सृष्ट्युत्तरेति ॥ आद्या सृष्टिरिति—उपलक्षणम् । आद्यकल्पस्य मध्ये विषमकर्मोत्पत्तौ [illegible] सृष्टानामपि तुल्य

भामती ।

निनीषते' इति श्रुतेरीश्वर एव द्वेषपक्षपाताभ्यां साधून्यसाधूनि कर्माणि कारयित्वा स्वर्गं नरकं वा लोकं नयति, तस्माद्वैषम्यदोषप्रसङ्गान्नेश्वरः कारणमिति वाच्यम्, विरोधात् । यस्मात् कर्म कारयित्वेश्वरः प्राणिनः सुखदुःखिनः सृजति इति श्रुतेरवगम्यते, तस्मात् सृजतीति विरुद्धमभिधीयते । न च वैषम्यमात्रमत्र ब्रूमो न त्वीश्वरकारणत्वमनेनापाक्रियत इति वाच्यम् । नियमो यदेवम् । तस्मादीश्वरस्य सदसत्कर्मापरामर्शमभिवदन्तीनां भूयसीनां श्रुतीनामनुग्रहायैष निनीषतेऽसौ निनीषत इत्येतदपि तज्जातीयपूर्वकर्माभ्यासवशात्प्राणिन इत्येव नेयम् । यथाह—'जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः । तेनैवाभ्यासयोगेन तदेवाभ्यसते नरः ॥' इति । अन्यत्र [illegible] सृष्टेस्तात्त्विकत्वमिदमुक्तम् । अनिर्वाच्या तु सृष्टिरिति न प्रश्नस्यावकाशः । तथा च मायाकारस्येवाप्तसाकल्यस्य रूपभेदेन विचित्रान् प्राणिनो दर्शयतो न वैषम्यदोषः, सहसा सहस्रशो वा न नैर्घृण्यम्, एवमस्यापि भगवतो विविधविचित्रप्रपञ्चमनिर्वाच्यं विश्वं दर्शयतः स्वभावाद्वा लीलया वा न कश्चिद्दोषः ॥ ३४ ॥ इति विषमे शङ्कापरिहारपरं सूत्रम्—न कर्माविभागादिति चेन्नानादित्वात् । शङ्कोत्तरे अतिरोहितार्थेन भाष्यकारेण व्याख्याते ॥ ३५ ॥

आनन्दगिरीय—न्यायनिर्णयः ।

न दूषणमिति वाच्यम् । तज्जातीयपूर्वकर्मान्वयमात्रात् प्रवृत्तानामीश्वरस्य प्रवर्तकत्वमात्रात् [illegible] तस्य मायामयसृष्टिकर्तृत्वादिप्रसङ्गाभावादिति भावः ॥ ३४ ॥ सर्गवैषम्यमाक्षिप्य समाधत्ते—न कर्मेति । पौर्वापर्यं प्राचीनं पश्चात्तनं वा कर्माविभागावस्थायां [illegible] दूषणम्—सदेवेति । विभागं निरस्यति—सृष्टीति । प्राचीनं हि कर्म प्रथमसृष्ट्यवस्थायां हेतुरिति विवक्षायां परस्पराश्रयत्वं [illegible] प्रकारान्तरम्—अत इति । देवादिविभागात् कर्मणश्च वैषम्यं [illegible] [illegible] [illegible] । [illegible]—नैष दोष इति । [illegible]—भवेदित्यादिना । [illegible]

शरीरं सम्भवति ॥ न च शरीरमन्तरेण कर्म सम्भवतीतीतरेतराश्रयत्वप्रसंगः ॥ अनादित्वे तु बीजांकुरन्यायेनोपपत्तेर्न कश्चिद्दोषो भवति ॥ उपलभ्यते च संसारस्यानादित्वं श्रुतिस्मृत्योः । श्रुतौ तावद्–"अनेन जीवेनात्मना" [ छां० ६ । ३ । २ ] इति सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेनाभिलपन्ननादिस्संसार इति दर्शयति ॥ आदिमत्त्वे तु ततः प्रागनवधारितः प्राणस्सन्कथं प्राणधारणनिमित्तेन जीवशब्देन सर्गप्रमुखेऽभिलप्येत ॥ न च धारयिष्यतीत्यतोऽभिलप्येत ॥ अनागताद्धि सम्बन्धादतीतः सम्बन्धो बलीयान् भवति । अभिनिष्पन्नत्वात् ॥ "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्" [ महानारा० ५ । ७ ] इति च मन्त्रवर्णः पूर्वकल्पसद्भावं दर्शयति ॥ स्मृतावप्यनादित्वं संसारस्योपलभ्यते–"न रूपमस्येह तथोपलभ्यते नान्तो

रत्नप्रभा ।

प्राक् कर्मासम्भवात् । तस्मात्कर्मशरीरयोरन्योन्याश्रयपरिहाराय सर्वैरपि वादिभिः संसारस्यानादित्वमङ्गीकार्यमित्याह–न चेति ॥ सर्गप्रमुखे सृष्ट्यादौ प्राणधारितप्राणोऽपि सन् प्राणधारणनिमित्तेन जीवशब्देनोच्यतामित्यत आह–न च धारयिष्यतीति ॥ "गृहस्थः सदृशीं भार्यां विन्देत" इत्यादावप्यगत्या भाविवृत्त्याश्रयणमिति भावः । अस्य संसारवृक्षस्य स्वरूपं सत्यं मिथ्या वेत्युपदेशं विना नोपलभ्यते । ज्ञानं विनान्तोऽपि नास्ति । नाप्यादिरुपलभ्यते । अतः आदेः न च सम्प्रतिष्ठा मध्ये स्थितिः । दृष्टनष्टस्वरूपत्वादिति गीतावाक्यार्थः । संसारस्यानादित्वेऽपि मिथ्यात्वात् "एकमेवाद्वितीयम्"

भामती ।

संसारदुःखमनुभावयन्ति क्लेशयन्तीति क्लेशास्तेषां वासनाः कर्मप्रवृत्त्यनुगुणास्ताभिराक्षिप्तानि प्रवर्तितानि कर्माणि तदपेक्षा उपलक्षणा अविद्या । स्यादेतत् । भविष्यतापि व्यपदेशो दृष्टो यथा 'पुरोडाशकपालेन तुषानुपवपति' इति । अत आह–न च धारयिष्यतीत्यत इति । सदेवमनादित्वे सिद्धे 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति प्राक् सृष्टेर्विभागाभावकथनं सुषुप्तावस्थापरागादिनिर्णयात् न पुनरत्यन्तमु-

आनन्दगिरीय–न्यायनिर्णयः ।

अस्तु तर्हि कर्मनिरपेक्ष ईश्वरो वैषम्यकारणं तत्राऽऽह–न च शरीरमिति । कथं तर्हि परस्पराश्रयत्वं परिहर्तुं पार्यते तत्राऽऽह–अनादित्वे त्विति । उपपत्तेर्हेतुरुक्तन्यायस्येति शेषः । संसारस्यानादित्वसाधनयुक्तिसामर्थ्यमानाभावे न तदुपपादयितुमपि शक्यमिति शङ्कायां [illegible]–उपलभ्यते चेति । संसारेऽनादित्वे श्रुतिस्मृती नैव दृश्येते तत्कथमिदमुच्यते [illegible] संसारस्यानादित्वमित्याशङ्क्याऽऽह–श्रुतौ तावदिति । शारीरस्याऽऽत्मनः सर्गप्रमुखे प्राणधारणनिमित्तेन जीवशब्देन परामर्शात्प्रागपि प्राणधारणं वृत्तमित्युक्तं संसारस्यानादित्वमिति व्यतिरेकमाह–आदिमत्त्वे त्विति । प्रागनवधारितप्राणः सन्नात्मा शारीर इति शेषः । ननु भाविनीं वृत्तिमाश्रित्याऽऽत्मनि जीवशब्दो 'गृहस्थः सदृशीं भार्यां विन्देत' इतिवद्भविष्यतीति नेत्याह–न चेति । संसारस्यानादित्वे श्रौतं लिङ्गान्तरमाह–सूर्येति । [illegible] संसारस्यानादित्वमिति [illegible] स्मृतावपीति । [illegible]

न चादिर्न च सम्प्रतिष्ठा" [ भ० गी० १५ । ३] इति ॥ पुराणे चातीतानामनागतानां च कल्पानां न परिमाणमस्तीति स्थापितम् ॥ ३६ ॥ इत्यवैषम्यनैर्घृण्याधिकरणम् ॥ १२ ॥

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥ ( १३ ) ॥

इति वैयासिक्यां शारीरकमीमांसायां द्वितीयाध्यायस्य प्रथमः पादः समाप्तः ॥

चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यस्मिन्नवधारिते वेदार्थे परैरुपक्षिप्तान्विलक्षणत्वादीन्दोषान्पर्यहार्षीदाचार्यः ॥ इदानीं परपक्षप्रतिषेधप्रधानं प्रकरणं प्रारिप्समानः स्वपक्षपरिग्रहप्रधानं प्रकरणमुपसंहरति ॥ यस्मादस्मिन्ब्रह्मणि कारणे परिगृह्यमाणे प्रदर्शितेन प्रकारेण सर्वे कारणधर्मा उपपद्यन्ते सर्वज्ञं सर्वशक्ति—

रत्नप्रभा ।

[ छा० ६ । २ । १ ] इत्यवधारणश्रुतेश्च । तस्मान्निरवद्ये ब्रह्मणि समन्वयाविरोध इति सिद्धम् ॥ ॥ ३६ ॥ ( १२ ) ॥ सर्वधर्मोपपत्तेश्च । निर्गुणस्य ब्रह्मणो जगदुपादानत्वादिवेदान्तसमन्वयो विषयः स किं निर्गुणं तन्नोपादानं यथा रूपमिति न्यायेन विरुध्यते न वेति सन्देहे भगवतीश्वरस्य विषमसृष्टिनिमित्तत्वम् । न प्रयोजकस्य कर्मणः सत्त्वात्तु उपादानत्वम् । तद्व्यापकस्य सगुणत्वस्याभावादिति प्रत्युदाहरणेन प्राप्ते सिद्धान्तसूत्रतात्पर्यमाह—चेतनमिति ॥ विवर्तोपादानत्वं निर्गुणस्याप्यविरुद्धम् । अज्ञातत्वस्य अधिष्ठानत्वप्रयोजकस्य सत्त्वात् । सगुणत्वं न व्यापकम् । शब्दादिनिर्गुणेषु नित्यजातिभ्रमदर्शनादिति भावः । यद्यपि सर्वज्ञत्वं सर्वशक्तित्वं च लोके कारणधर्मत्वेनाप्रसिद्धम् । तथापि यो यस्य कर्ता स तस्य सर्वस्य ज्ञाता शक्तश्चेति प्रसिद्धम् । ईश्वरस्यापि सर्वकर्तृत्वश्रवणात् प्रसिद्ध्यनुसारेणार्थान्तरनिराससर्वज्ञत्वं, सर्वशक्तित्वं च,—सिध्यतीत्यभिसन्धायाह—सर्वज्ञं सर्वशक्तीति ॥

भामती ।

तान्परिहरतीति सर्वमवदातम् ॥ ३६ ॥ ( १२ ) ॥ सर्वधर्मोपपत्तेश्च । अत्र सर्वज्ञमिति दर्शयते सर्वस्य चेतनाधिष्ठितस्यैव लोके प्रवृत्तिरिति लोकानुसारो दर्शितः । सर्वशक्तीति । सर्वस्य जगत उपादानकारण

आनन्दगिरीय–न्यायनिर्णयः ।

पौराणिकीं सम्मतिमाह—पुराणे चेति ॥ ३६ ॥ ( १२ ) ॥ पूर्वाधिकरणे कर्मसापेक्षस्येश्वरस्य विषमसृष्टिहेतुत्वमुक्तं तथाऽपि ब्रह्म सगुणमुपादानत्वान्मृदादिवदित्याशङ्क्याऽऽह—सर्वधर्मेति । निर्गुणस्य ब्रह्मणो जगदुपादानत्वादिसमन्वयो विषयः, स किं यन्निर्गुणं न तदुपादानं यथा गगनमिति न्यायेन विरुध्यते न वेति पूर्ववत् सन्देहे पूर्वपक्षमनूद्य सिद्धान्तमाह—चेतनमित्यादिना । निर्गुणस्य सर्वत्रोपादानत्वायोगात् सगुणत्वे मृदादिवदुपादानत्वेन प्राप्ते विवर्ताधिष्ठानस्योपादानत्वात्तस्य च निर्गुणेऽपि जात्यादावपि सम्भवात् निर्गुणस्यापि ब्रह्मणो जगदुपादानत्वमिति सिद्धान्तमभिसन्धाय सूत्राक्षराणि व्याचष्टे—यस्मादिति । पादादिसङ्गत्यनुक्त्या फलं च पूर्वोत्तरपक्षयोः पूर्ववदेव । यद्यपि लोके सर्वज्ञत्वं कारणस्य धर्मो न दृश्यते तथाऽपि कुलालादौ बुद्धिशक्त्योर्दर्शनात्कल्पयितुं शक्यं तेन सर्वस्य कर्तुः सर्वज्ञत्वमर्थादिति मत्वाऽऽह—सर्वज्ञमिति । एवं सर्वशक्तित्वमपि शास्त्रप्रसिद्धिसिद्धम् । मत्वाऽऽह—सर्वशक्तीति । तेनोपादानत्वमुपपादितं सर्व-

**महामायं च ब्रह्मेति ॥ तस्मादनतिशङ्कनीयमिदमौपनिषदं दर्शनमिति ॥ ॥ २ ॥ १ ॥ ३७ ॥ इति सर्वधर्मोपपत्त्यधिकरणम् ॥ १३ ॥**

**इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दपूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये सांख्ययोगकाणादादिभिस्तत्तर्कैश्च विरोधपरिहारो नाम द्वितीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥ २ ॥ १ ॥**

---

रत्नप्रभा ।

**महामायमिति ।** कर्तृत्वोपादानत्वकथनं सर्वशक्त्यपह्नवक्षालनायोक्तम् । तस्मादौपनिषदसिद्धान्ते न कश्चिद्दोष इति सिद्धम् ॥ ३७ ॥ २ ॥ १ ॥ ( १३ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां ( भाष्य ) रत्नप्रभायां द्वितीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥ २ ॥ १ ॥

भामती ।

निमित्तकारणं चेत्युपपादितम् । **महामायमिति ।** सर्वानुपपत्तिशङ्का प्रशान्ता । तस्माज्जगत्कारणं ब्रह्मेति सिद्धम् ॥ ३७ ॥ ( १३ ) ॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादशारीरकभाष्यविभागे भामत्यां द्वितीयस्याध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥

आनन्दगिरीय-न्यायनिर्णयः ।

कर्तृत्वेन निमित्ततोक्तिरिति भेदः । निर्गुणत्वादिप्रयुक्तसर्वानुपपत्तिशङ्कोपशान्तये विशिनष्टि—**महामायं चेति ।** एतेन प्रकृत्यन्तरनिरपेक्षत्वं मायाविद्यादिशब्दितमनिर्वाच्यमज्ञानं कारणत्वादिसर्वव्यवहारनिर्वाहकमस्तीत्युक्तम् । यस्मादित्यस्यापेक्षितं पूर्वोक्तन्यायार्थमुपसंहरति—**तस्मादिति ।** स्मृतिन्यायविरोधः समन्वयस्य नास्तीति सिद्धमिति वक्तुमितिशब्दः ॥ ३७ ॥ ( १३ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि (ज्ञान) विरचिते श्रीमच्छारीरकभाष्यन्यायनिर्णये द्वितीयाध्यायस्य प्रथमः पादः समाप्तः ॥ २ ॥ १ ॥

**॥ इति द्वितीयाध्यायस्य सांख्ययोगकाणादादिभिस्तत्तर्कैश्च विरोधपरिहाराख्यः प्रथमः पादः ॥**

---

# द्वितीयाध्याये द्वितीयः पादः २.



## रचनानुपपत्तेश्च नानुमानम् ॥ २ ॥ २ ॥ १ ॥ ( १ ) ॥

यद्यपीदं वेदान्तवाक्यानामैदम्पर्यं निरूपयितुं शास्त्रं प्रवृत्तं न तर्कशास्त्रवत्केवलाभिर्युक्तिभिः कञ्चित्सिद्धान्तं साधयितुं दूषयितुं वा प्रवृत्तम् । तथापि वेदान्तवाक्यानि व्याचक्षाणैस्सम्यग्दर्शनप्रतिपक्षभूतानि सांख्यादिदर्शनानि निराकरणीयानीति तदर्थः परः पादः प्रवर्तते ॥ वेदान्तार्थनिर्णयस्य च सम्यग्दर्शनार्थत्वात् । तन्निर्णयेन स्वपक्षस्थापनं

रत्नप्रभा ।

ॐ ब्रह्मणे नमः । साङ्ख्यनास्तिकबौद्धाश्च जैनाः पाशुपतादयः । यस्य तत्त्वं न जानन्ति तं वन्दे रघुपुङ्गवम् ॥ १ ॥ ब्रह्मणि सर्वधर्मोपपत्तिवत् प्रधानेऽपि तदुपपत्तिमाशङ्क्य निराचष्टे—रचनानुपपत्तेश्च नानुमानम् ॥ [ २ । २ । १ ] इति । ननु मुमुक्षुणा वाक्यार्थनिर्णयप्रतिबन्धनिरासाय वेदान्तानां तात्पर्यं निश्चेतुमिदं शास्त्रमारब्धम् । तच्च निर्दोषतया निश्चितम् । ततः परपक्षनिरासात्मकोऽयं पादोऽस्मिञ्छास्त्रे न सङ्गतः । तन्निरासस्य मुमुक्ष्वनपेक्षितत्वादित्याक्षिपति—यद्यपीति ॥ परपक्षनिराकरणं विना स्वपक्षस्थैर्यायोगात्, तत् कर्तव्यमित्याह—तथापीति ॥ तर्हि स्वपक्षस्थापनात् प्रागेव परपक्षप्रत्याख्यानं कार्यमित्यत आह—वेदान्तार्थेति ॥ वेदान्ततात्पर्यनिर्णयस्य फलवज्ज्ञानकरणान्तर्भावादभ्य-

भामती ।

रचनानुपपत्तेश्च नानुमानम् । स्यादेतत् । इह हि पादे स्वतन्त्रा वेदनिरपेक्षाः प्रधानादिसिद्धिविषयाः साङ्ख्यादियुक्तयो निराकरिष्यन्ते । तदयुक्तमशास्त्रार्थत्वात् । न हीदं शास्त्रं युक्तिप्रधानं तर्कशास्त्रवत् प्रवृत्तमपि तु वेदान्तवाक्यानि ब्रह्मपराणीति पूर्वपक्षोत्तरपक्षाभ्यां विनिश्चेतुम् । तत् कः प्रसङ्गः शुष्कतर्कस्य स्वतन्त्रयुक्तिनिराकरणस्येत्यत आह—यद्यपीदं वेदान्तवाक्यानामिति । न हि वेदान्तवाक्यानि निर्णीतान्यपीति निर्णीयन्ते, किन्तु मोक्षमाणानां तत्त्वज्ञानोत्पादनाय । यथा च वेदान्तवाक्येभ्यो जगदुपादानं ब्रह्मावगम्यते, एवं साङ्ख्याद्यनुमानेभ्यः प्रधानाचेतनं जगदुपादानमवगम्यते । न चैतद्द्वयं चेतनोपादानमचेतनोपादानं चेति समुच्चेतुं शक्यम्, विरोधात् । न च व्यवस्थिते वस्तुनि विकल्पो युज्यते । न चागमबाधितविषयत्वादनुमानस्य नोदयः इति साम्प्रतम् । सर्वज्ञप्रणीततया साङ्ख्याद्यागमस्य वेदागमतुल्यत्वात् तदनुगृहीतस्यानुमानस्य प्रतिहतिमिहतुल्यतयाऽसाधनात् । तस्माद्विरोधात् ब्रह्मणि समन्वयो वेदान्तानां सिध्यतीति न तत्त्वज्ञानं मोक्षमर्हतीति । न च तत्त्वज्ञानात् मोक्ष इति स्वतन्त्रागमानुमानानामाभासीकरणमिह शास्त्रे सङ्गतमिति । येन तत्र परपक्षानुमाननिरास एव स्वपक्षस्थापनं न स्यादित्यत आह—वेदान्तार्थनिर्णयस्य चेति । ननु वीतरागकथायां तत्त्वनिर्णयमात्रमुपयुज्यते न पुनः परपक्षाधि-

आनन्दगिरीय–न्यायनिर्णयः ।

ब्रह्मणि कारणे सत्तानुगमसर्वज्ञत्वादिधर्मोक्तेऽपि प्रधानेऽपि तदुपपत्तिमाशङ्क्योक्तम्—रचनानुपपत्तेश्चेति । पूर्वपादेन समन्वये वादिभिरुद्भाविता विरोधादयो दोषा निरस्ताः । सम्प्रति परपक्षाणां भ्रान्तिमूलत्व पादान्तरमारभ्यते । ननु तर्कशास्त्रादस्य शास्त्रस्य सर्वज्ञमतानां वेदान्तवाक्यमात्रतात्पर्यानिर्णायकत्वात् तदपेक्षितन्यायजातस्य समन्वयाध्याये सिद्धत्वात् परपक्षनिराकरणमिति कथं नेहोपयुज्यते तस्मिन्ननेन पादेनेति तत्राऽऽह—यद्यपीति । परपक्षप्रतिक्षेपमन्तरेण स्वपक्षस्य स्थिरत्वायोगात् तन्निराकरणमपि प्रसङ्गागतमिति पादारम्भं समर्थयते—तथाऽपीति । स्वपक्ष निर्णयेऽपि तु परपक्षो निरासनीयश्चेत्तर्हि प्रथमं किमिति न कृतमित्याशङ्क्याऽऽह—वेदान्तेति । परपक्षप्रतिक्षेपस्यापि तदर्थ-

प्रथमं कृतम् । तद्धयभ्यर्हितं परपक्षप्रत्याख्यानादिति ॥ ननु मुमुक्षूणां मोक्षसाधनत्वेन सम्यग्दर्शननिरूपणाय स्वपक्षस्थापनमेव केवलं कर्तुं युक्तम् । किं परपक्षनिराकरणेन परविद्वेषकरणेन ॥ बाढमेवम् । तथापि महाजनपरिगृहीतानि महान्ति सांख्यादितन्त्राणि सम्यग्दर्शनापदेशेन प्रवृत्तान्युपलभ्य भवेत्केषाञ्चिन्मन्दमतीनामेतान्यपि सम्यग्दर्शनायोपादेयानीत्यपेक्षा ॥ तथा युक्तिगाढत्वसम्भवेन सर्वज्ञभाषितत्वाच्च श्रद्धा च तेष्विति ॥ अतस्तदसारतोपपादनाय प्रयत्यते ॥ ननु "ईक्षतेर्नाशब्दम्" [ व्या० सू० १ । १ । ५ ] "कामाच्च नानुमानापेक्षा" [ व्या० सू० १ । १ । १८ ] "एतेन सर्वे व्याख्याता व्याख्याताः" [ व्या० सू० १ । ४ । २८ ] इति च पूर्वत्रापि सांख्यादिपक्षप्रतिक्षेपः कृतः । किं पुनः कृतकरणेनेति ॥ तदुच्यते । सांख्यादयः स्वपक्षस्थापनाय वेदान्तवाक्या-

रत्नप्रभा ।

र्हितत्वम् । ननु रागद्वेषकरत्वात् परमतनिराकरणं न कार्यमिति शङ्कते—नन्विति ॥ तत्त्वनिर्णयप्रधाना खल्वियं कथा आरब्धा । तत्त्वनिर्णयश्च परमतेष्वश्रद्धां विना न सिध्यति । सा च तेषु भ्रान्तिमूलत्वनिश्चयं विना न सिध्यति । स चेमं पादं विना नेति स्वसिद्धान्तसंरक्षणार्थत्वात् प्रधानसिद्ध्यर्थत्वादयं पादोऽस्मिञ्छास्त्रे सङ्गतः । सुगतत्वार्हन्निराकरणमपि कर्तव्यं इत्यभिसन्धायोक्ताङ्गीकारेण समाधत्ते—बाढमित्यादिना ॥ अपदेशेन व्याजेन । मन्दमतीनां तेषु श्रद्धानिमित्तानि बहूनि सन्तीति तन्निरासाय यत्नः क्रियत इत्यर्थः । स्वमतश्रद्धापरमतद्वेषौ तु प्रधाननिदर्शनार्थत्वादङ्गीकृतौ । गाम्य द्वेषः । परपक्षत्वबुद्ध्या हि निरासो द्वेषमापादयति । न तु तत्त्वनिर्णयेच्छया कृत इति मन्तव्यम् । पौनरुक्त्यं शङ्कते—नन्वीक्षतेरिति ॥ पूर्वं सांख्यादीनां श्रुत्यर्थानुग्राहकतर्कनिरासाद्दर्शनान्वयुक्तम् । संप्रति श्रुत्यनपेक्षास्तदीयाः स्वतन्त्रा युक्तयो निरस्यन्त इत्यर्थभेदान्न पुनरुक्तिरित्याह—तदुच्यत इति ॥

भामती ।

क्षेपः, स हि सरागतामावहतीति चोदयति—ननु मुमुक्षूणामिति । परिहरति—बाढमेवं तथापीति । तत्त्वनिर्णयावसाना वीतरागकथा । न च परपक्षदूषणमन्तरेण तत्त्वनिर्णयः शक्यः कर्तुमिति तत्त्वनिर्णयाय वीतरागेणापि परपक्षो दूष्यते न तु परपक्षतयेति न वीतरागकथात्वव्याहतिरित्यर्थः । पुनरुक्ततां परिचोद्य समाधत्ते—नन्वीक्षते-

आनन्दगिरीय—न्यायनिर्णयः ।

स्वमतनिष्ठनिरासयोर्वयं करणस्येतिकर्तव्यताकाङ्क्षायामन्तरङ्गत्वात्प्रकृतनिरूपणस्यैव प्राथम्यमित्याह—तद्धीति । सम्यग्धीहेतोर्वेदान्तार्थस्य स्वपक्षस्थापनानन्तरं परपक्षनिरसनमुचितमिति निगमयितुमितिशब्दः । वीतरागाणां मोक्षमाणानामपेक्षितमोक्षहेतुतया तत्त्वज्ञानमात्रमुपयुक्तं परपक्षाधिक्षेपस्तु वीतरागतानिरोधीत्ययुक्तमिति शङ्कते—नन्विति । मुमुक्षूणां मोक्षोपयिकत्वेन सम्यग्धीरेवोपयुक्ता युक्तमङ्गीकरोति—बाढमिति । किमिति तर्हि परपक्षनिराकरणं परविद्वेषकरणमनुष्ठेयं तत्राऽऽह—तथापीति । सांख्यादिदर्शनानां महाजनपरिगृहीतत्वात्प्रमाणादिकारणपरतया महत्त्वात्तत्त्वज्ञानापदेशेन प्रवृत्तत्वादीनामुपलम्भात्सर्वज्ञभाषितत्वेन वेदान्तैरविरोधाद्युक्तिगम्भीरतया च मन्दनिरासे नेत्यपि तेषामपि श्रद्धयाश्रयः इत्यादितः सम्यग्धीहेतुत्वाय तन्निराकरणं कर्तव्यमिति तर्कपादारम्भः सम्भवतीत्यर्थः । पुनरुक्तिं शङ्कते—नन्विति । प्रधानपक्षनिराकरणं पूर्वमपि कृतमित्याशङ्क्याऽऽह—कामाच्चेति । तथाऽपि परमाण्वादिवादनिरासार्थं पादारम्भो नेत्यत्राऽऽह—एतेनेति । तर्हि प्रधानादीनां श्रुतिमत्त्वनिरासस्य सिद्धत्वात् पुनरुक्तिरित्याह—तेषामिति । विशेषं दर्शयन्नाह—तदुच्यत इति । स्वपक्षे वेदान्तविरोधिनाः-

१ ख-स्वपक्षस्थापनमेव । २ क-ग-घ-ङ-पुस्तकेषु परपक्षनिरासोऽपि कर्तव्यः ।

